# द्वारकापीठ 'श्री' चरणेभ्यः स्वागतम्



भारतं धर्मक्षेत्रम् । पश्चिमसागरतीरे पश्चिमाम्नाये द्वारिकापीठम् आद्यशंकराचार्य-'श्री'-चरणैः प्रस्थापितम् । तत्र (७७) सप्तसप्ततितमाः संप्रति पीठाधीशाः । पू. अभिनवसच्चिदानन्दतीर्थ 'श्री' चरणाः । अस्मिन् पुरुषोत्तममासे अधिकाषाढ शु. ८, दुर्गाष्टमी (१८९१) दिने सोमवासरे (२३ जून १९६९) एते पावयिष्यन्ति पुण्यपत्तनं शुभागमनेन । सानन्दं सविनयं सादरम् उद्घोषयन्ति 'शारदा' काराः **प. पू. 'श्री' चरणेभ्यः स्वागतम् ।**

पू. द्वारका-'श्री'-चरणाः

वर्षद्वयात् पूर्वं शृङ्गेरी 'श्री' चरणाः प्राप्ताः पुण्यपत्तनम् । सप्ताहान्तं तेषां निवासः सर्वेषां प्रमोदाय धर्मभावनासंवर्धनाय इति अनुभूतम् । उद्यानप्रासादे ! नहि नहि इन्द्रप्रासादे तेषां निवासः कल्पितः । तेन अयं धर्मप्रासादः संवृत्तः । अत्रैव पुण्यनिवासः संप्रति द्वारकापीठदेवतानां श्रीशारदाम्बा-चन्द्रमौलीश्वर-सहितानां 'श्री'-चरणानाम् । अहो भाग्यम् ।

**स्मर्यताम् । त्वर्यताम् । स्मर्यताम् ।**

२३ जून ६९-दुर्गाष्टमी दिने सोमवासरे प्रदोषकाले प्रविशन्ति पुण्यपत्तनं 'श्री' चरणाः । २४, २५, २६, २७, २८, जून १९६९ इति पुण्याहपञ्चकं परिपूर्णमङ्गलः तेषाम् अत्र निवासः । त्रिकालपूजा, दैवतदर्शनं, मङ्गलप्रवचनं, पाद्यपूजा, विद्वद्गोष्ठी संमाननपत्रसमर्पणम् इत्यादयः विविधाः कार्यकलापाः । २९ जून १९६९ मन्दवासरे पूर्णिमापर्वणि प्रातः पवित्रसमये तेषां प्रस्थानमङ्गलं गुर्जरराज्यं प्रति ।

सर्वे पुण्यपुरी-पौराः धर्मदीपं द्वारकापीठ-विभवं साक्षात्कुर्वन्तु । 'श्री'-चरणानां मङ्गलप्रवचनामृतपानेन पुण्याः भवन्तु । धन्याः भवन्तु ।

द्वारकापीठ 'श्री' स्वागत-समितिः
पुण्यपत्तनम्

**वसन्त अ. गाडगीळ**
संयोजकः

## ।। नमः शान्ताय तेजसे ।।



**पू. गुळवणीमहाराजः, पू. धुण्डिराजमहाराजः, पू. दत्तमहाराजः ।**

ब्रह्मश्री-विद्यावाचस्पति-पं. कवीश्वर दत्तात्रेयशास्त्रिमहाराजः । गुरुदेवाः/शारदाकाराणाम् । महाराष्ट्रस्थः संचरिष्णुः वेदान्तः । यथा विद्यासंपन्नः तथा विनयातिशयसंपन्नः । अस्य महापुरुषस्य षष्ट्यब्दपूर्ति-समारोहः सुसंपन्नः पुण्यपत्तने । विविधैः धार्मिकैः यागानुष्ठानैः । संमानन-पत्रम् अपि समर्पितं महाराष्ट्र-मैसूर-राज्यस्थैः ५१ संस्थाभिः । तत्र सभा-ध्यक्षः योगिराजः वामनराय गुळवणीमहाराजः । शुभाशीर्वादसमर्पणार्थम् पू. दत्तमहाराजपितृचरणानां पू. धुण्डिराजमहाराजानाम् (८४) उपस्थितिः। पू. दत्तमहाराजः, पू. धुण्डिराजमहाराजः पू. गुळवणीमहाराजः च इति त्रयाणां रूपेण प्रत्यक्षं विद्याविनयसंपन्ना सेवा, सेवामूला भक्तिः, सेवाभक्तिमूलं वैराग्यफलं योगशास्त्रम् इति स्वरूपभिन्नस्य अपि प्रकृत्या एकस्य एव अद्वितीयस्य त्रिगुणात्मकस्य भगवतः दत्तावधूतपरमेशस्य दर्शनं भक्तजनैः लब्धम् इति श्रद्धा 'शारदा' काराणाम् । इयं त्रयी शतं जीवतु । भारतवर्षे भक्ति-ज्ञान-सेवा-वैराग्यादि-गुण-संपदां समुच्चयस्य समृद्धिं करोतु । इयमेव प्रार्थना ।

नमः शान्ताय तेजसे ।

पुणें ) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया ( मुम्बई
शृङ्गेरी-शारदापीठ-श्री-शंकराचार्यैः संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता

सौर १ आषाढ १८९१



# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् १० अङ्कौ १५-१६

वार्षिकमूल्यम् रू. ८ * अस्य अङ्कस्य रू. ०-८०

## ॥ श्रीपद्मावतीस्तवः ॥

पद्मे ! पदाब्जयुगलं तव वन्दनीयम्
वन्दे सदा सविनयं जनसौख्यदायि ।
त्वं वन्दिता वितरसि प्रणतेषु सौख्यम्
बुद्धिं प्रयच्छ विमलां सुखदां सदा मे ॥१॥

संसारदुःखशतपीडितमानसोऽहम्
त्वाम् आश्रयामि मम दुःखनिवारणाय ।
मातः ! कृपाङ्कुरितदृष्टिनिपातनेन
नाशं नयाशु मम दुःखदविघ्नराशिम् ॥२॥

त्वां पूजयामि शुभदे ! शुभवासरेऽद्य
विष्णुप्रिये ! कमलवासिनि ! सिन्धुकन्ये !
मातः ! कृपां कुरु रमे ! वस मद्गृहे त्वम्
चित्तं प्रवर्तय सदा शुभकर्मणीदम् ॥३॥

जाने न देवि, तव पूजन-तन्त्र-मन्त्रान्
जाने न काव्यरचनां तव सौख्यदां वा ।
जानामि केवलमिदं स्मरणं त्वदीयम्
सद्यो विनाशयति भक्तजनस्य दुःखम् ॥४॥

कान्तं मुखं तव शरच्छशिरश्मिगौरम्
दिव्याम्बरं कनकभास्वरकान्तिरम्यम् ।

नेत्रद्वयं सरसिजप्रतिमं सुनीलम्
नीलस्तमालसदृशो घनकेशपाशः ॥५॥
भक्ताः स्मरन्ति भयपूरितमानसास्त्वाम्
चित्रं किमत्र कमले! जनरीतिरेषा ।
बालाः स्मरन्ति जननीं क्षुधिता यदा ते
भृङ्गाः श्रयन्ति कमलं मधु यावदस्ति ॥६॥
त्वामर्चयामि कविताकमलैः प्रफुल्लैः
चेतः प्रसीदतु भृशं तव देवि पद्मे !
गंगाजलेन हि यथा क्रियते तदर्चा
त्वत्पूजनं तव कृपास्फुरितैर्वचोभिः ॥७॥
स्तोत्रं मया कृतमिदं जलधेः सुतायाः
'कृष्णासुतेन' वरदं 'जयराम' नाम्ना ।
वन्दे गुरुं प्रियदिगम्बर-'शंकरं' मे
काव्यं तदङ्घ्रियुगले च समर्पयेऽहम् ॥८॥

साङ्गली पं. जयराम पुरुषोत्तम जोशी

## तुका म्हणे — ८ — मन्यते तुका

जिथें जातो तिथें
तू माझा सांगाती ।
चालविसी हाती
धरूनिया ॥

चालो वाटे आम्ही
तुझाचि आधार ।
चालविसी भार
सवे माझा ॥

बोलो जाता बरळ
करिसी तें नीट ।
नेली लाज धीट
केलो देवा ॥

अवघे जन मन
झाले लोकपाळ ।
सोइरे सकळ
प्राणसखे ॥

तुका म्हणे आता
खेळतों कौतुकें ।
जालें तुझें सुख
अंतर्बाहीं ॥

तुकारामः

यत्र यत्र प्रभो यामि
तत्र तत्रैषि मामनु ।
गृहीत्वा पाणिना पाणौ
नयन्नग्रे पदे पदे ॥

त्वामेव वयमाश्रित्य
पन्थानं गन्तुमीश्महे ।
यस्त्वं वहसि भारं मे
निजस्कन्धेन केशव ॥

अक्षराणां निरर्थानाम्
मम त्वं ह्यर्थदायकः ।
कातर्यं च समुत्सार्य
धैर्यं मयि समादधाः ॥

त्वत्प्रसादात् जनाः सर्वे
लोकपाला ममाभवन् ।
सर्वेऽपि सुहृदः प्रेष्ठाः
सर्वे च ज्ञातिबान्धवाः ॥

तुकारामस्य गोविन्द
त्वदानन्दघनस्य मे ।
अधुना जीवितं ह्येका
क्रीडा रसमयी स्थिता ॥

— डॉ. ग. बा. पळसुले

* * * * * * * * * * * * * * * * * * * * * * * * *

नवाये नालें गम् अंदोत जूनो । अयारे जरे खालिस बूत जूनो ।।
बुरा सूता दिलों वाहम् ब नालेम् । कें हालें दिल् दिल् सूत जूनो ।।

जानाति हृद्रुजमहो विरहाग्निदग्धः ।
जानाति हाटकगुणं निकषोपलो हि ।।
आगच्छतात्र रुदिमः प्रियशोकतप्ताः ।
जानाति दग्धहृदयं विरही न चान्यः ।।

१८-६-३१० गौळीपुरा
गौळा रामय्या वाडा हैद्राबाद २

न्या. गुण्डेराव हरकारे
निवृत्तः सत्रन्यायाध्यक्षः

---

## मनाचे श्लोक

गणाधीश जो ईश सर्वा गुणांचा
मुळारंभ आरंभ तो निर्गुणाचा ।
नमूं शारदा मूळ चत्वारि वाचा
गमूं पंथ आनंत या राघवाचा ।।१।।
मना सज्जना भक्तिपंथेचि जावे
तरी श्रीहरी पाविजे तो स्वभावें ।
जनीं निंद्य ते सर्व सोडोनि द्यावें
जनीं वंद्य तें सर्व भावें करावे ।।२।।

श्रीसमर्थरामदासः

## मनोबोधः ।

गणानाम् अधीशं सुरेशं गुणेशम् ।
परब्रह्मणश्चापि मूलं स्वरूपम् ।
प्रणम्याथ तां शारदां शारदाभाम् ।
भजेऽहं परं राघवीयं सुमार्गम् ।।१।।
मनः सज्जन ! भक्तिमार्गेण गच्छेः ।
सलीलं भवेत् तेन देवः प्रसन्नः ।
सखे वर्जनीयं त्वया निन्द्यकार्यम् ।
मनो रे त्वया श्लाघनीयं हि कार्यम् ।।२।।

दि. अ. पंढरपुरे

---

स्मर्यताम् अग्रिमाङ्के स्मर्यताम्

**झाला महार पण्ढरिनाथ....अन्त्यजो हि पण्ढरिनाथः**

## राजराजेश्वर परशुराम । (मराठी पुस्तकम्)

भगवतः परशुरामस्य जीवितम्, तेन च अनुष्ठितानि कार्यविशेषाणि अत्र ग्रन्थे प्रतिपादितानि सन्ति । परशुरामस्य राजनीतिः विष्णुधर्मोत्तरपुराणम्, तस्य रणनीतिश्च जामदग्न्यधनुर्वेदम् अनुसृत्य विशदीकृताऽस्ति । रामायण-भारतयोः वर्णितानां परशुराम-संबद्धानाम् अनेकासां घटनानां (अम्बार्थं भीष्मेण सह युद्धम्, दाशरथे रामस्य वीर्यजिज्ञासा, कर्णाय विद्यादानं शापप्रदानं च इत्यादीनां) मर्म क्वचित् श्रीमन्मध्वाचार्याणां पदानुगमनेन, क्वचित्तु स्वामेव सश्रद्धां बुद्धिम् आश्रित्य स्पष्टीकृतम् अस्ति । यत्सत्यम् अनेकेषु स्थलेषु लेखकः सश्रमं दृष्टिकोणं समर्थयते, तद्बलाच्च अनेकेषु स्थलेषु शब्दानाम् अदृष्टपूर्वम् आध्यात्मिकम् अर्थं पश्यति । इतः पूर्वम् अज्ञातम् (अल्पज्ञातं वा) इदम् अस्मात् ग्रन्थात् ज्ञायते, यत् भगवान् परशुरामः श्रीविद्यायाः महान् उद्गाता आसीत्, तस्य च सुवर्णतन्त्रेऽपि अधिकार आसीत्, इति । परशुरामचरितस्य सारः लेखकस्यैव शब्दैः इत्थं दातुं शक्यते ।

परशुरामस्य राजनीतिः समाजस्य विनयाधानार्थम्, धनुर्वेदः अन्यायपरिमार्जनार्थम्, ऐश्वर्यं दानार्थम्, अपरान्ते उपनिवेशः वैदिकसंस्कृतेः प्रतिष्ठापनार्थम्, अवधूतदत्तात्रेयद्वारा श्रीविद्यायाः सुलभीकरणं च मानवकल्याणार्थम् आसीत् ।

एकः प्रमादः दूरीक्रियते । भाण्डारकर-संशोधन-मन्दिरस्य महाभारते द्रोणपर्वणि षोडशं राजकीयम् उपाख्यानं मूले संगृहीतं नास्ति । तत् तत्र प्रक्षिप्तं मतमस्ति । किंतु नैतावता भ्रमितव्यम्, यत् भाण्डारकर-महाभारतावृत्त्यनुसारेण षोडशराजकीयं सर्वत्रैव महाभारते प्रक्षिप्तम् इति । यतः द्रोणपर्वणि अलब्धावकाशमपि तत् शान्तिपर्वणि मूले अन्तर्भावितम् अस्ति । अयं च एकः लेखनदोषः स्फुटं प्रतीयते । ग्रन्थे प्रकरणविभागो नास्ति, न वा विषयविभागसूचकानि शीर्षकानि । तेन विषयविशेषस्य ढूण्ढनं क्लेशाय भवति । मुद्रणं तु सुभगम्, चित्रं च प्रभाववत् । अभिनन्दनीयाः श्री. म. स. पारखे महाभागाः परशुराम चरितप्रकाशनार्थम् ।

५९३ सदाशिव
पुण्यपत्तनम्

— डॉ. ग. बा. पळसुले

---

लेखकः श्री. म. स. पारखे । पृष्ठसंख्या १२३ (डेमी) । मूल्यम् : ७ रू.

# आदर्शः ग्रंथपाल श्री. वा. पु. कोल्हटकर

महाराष्ट्र-राज्ये पुण्यपत्तने महाराष्ट्र-प्रादेशिक-ग्रन्थालयः नाम सुविख्यातः महाराष्ट्र-शासनस्य अङ्गभूतः ग्रन्थालयः विद्यते । तस्य ग्रन्थपालपदे श्री. कोल्हटकरमहोदयः विंशतिवर्षादधिककालपर्यन्तम् अधिकृतः । सेवायाः कालमर्यादां प्राप्तः सः तस्मात् पदात् अचिरात् एव निवृतः भविष्यति ।



श्री. वा. पु. कोल्हटकर

श्री. कोल्हटकरमहोदयेन मुम्बापुरी-नागपुर-पुण्यपत्तन-वेणुग्राम बेळगाव इति विविधस्थानेषु-पाठशालासु, महाविद्यालयेषु च स्वाध्ययनकालः नीतः । तत्र भाषासु अध्यापनशास्त्रे च स्नातकत्वं प्राप्तम् । तदनु ग्रन्थपालनशास्त्रस्य अध्ययनार्थं तस्मिन् पदविकाप्राप्त्यर्थं च सः मद्रासनगरीम् आगच्छत् । तत्र डॉ. रंगनाथन् नाम्नः विश्वविख्यातस्य प्रकाण्डपण्डितस्य सः अन्तेवासी आसीत् । ग्रन्थपालनशास्त्रस्य च सम्यगालोडनं कृतवान् ।

ततः निवृत्तः पुण्यपत्तने मुम्बय्यां च ग्रन्थालयसेवां कुर्वता तेन कः अपि कालः नीतः । पश्चात् उपरिनिर्दिष्टस्य ग्रन्थालयस्य साहाय्यक-ग्रंथपालपदे सः शासनेन नियुक्तः । प्रमुख-ग्रन्थपालस्य निवृत्तेः ऊर्ध्वम् अद्यावधि श्री. कोल्हटकरमहोदयः एव तत्स्थानं विभूषयति ।

निरक्षरजनबहुलस्य अज्ञानतिमिरावृतस्य अस्य भारतदेशस्य अभ्युत्थानार्थं ज्ञानविज्ञानादीनाम् उपासना आवश्यकी । ज्ञानविज्ञानोपासनायां ग्रन्थादिसाधनानाम् तेषां संग्रहकारित्वात् च ग्रन्थालयानाम् अपि महत्त्वम् अनन्यसाधारणम् । ग्रन्थालयः न केवलं ग्रन्थानाम् संग्रहस्य उपलब्धेः वा स्थानम्, किंतु ग्रन्थानाम् अध्ययनस्यापि स्थानम् । अतः अध्ययनार्थं तत्र जग्मुषां जनानां तत्स्थानस्य आह्लाददायकत्वम्, नीरवत्वम्, सेवकानां सौजन्यपूर्णः व्यवहारः, ग्रन्थानाम् विनायासेन प्राप्तिः इत्यादयः गुणाः अध्ययनस्य उपकारकाः भवन्ति । अतः आत्मनः कार्यस्थानम् अयं ग्रन्थालयः एभिः गुणैः विशिष्टः स्यात् इत्यर्थं श्री. कोल्हटकरमहोदयः आ

नियुक्तिसमयात् सततं प्रयत्नशील: आसीत् । अत: अस्य ग्रन्थालयस्य यद् आधुनिकतमं स्वरूपम् अस्माभि: अधुना दृश्यते, यत् च ग्रन्थादानप्रदानार्थम् अध्ययनाय च असंख्या: जना: प्रतिदिनम् तत्र आगच्छन्ति स: अधिकांशेन श्री. कोल्हटकरमहोदस्य व्यवस्थापनचातुर्यस्य एव परिणाम: ।

ग्रन्थपालनशास्त्रस्य अध्ययनं सुलमं भवेत् इति पुण्यपत्तने ये अध्यापनवर्गा: प्रतिवर्षं संचालिता: भवन्ति तेषु अपि अध्यापनस्य कार्यं तेन अङ्गीकृतम् । तथा च प्रतिवर्षं ग्रन्थालय-ग्रन्थपालन-विषयका: परिसंवादा: परिषद: वा स्थाने स्थाने संमीलिता: भवन्ति तत्र तत्र तस्योपस्थिति: संवादादिषु च प्रत्यक्षं सहकारित्वं नियमितम् एव। अनेन तेन ग्रन्थालयशास्त्रगतं स्वज्ञानं न केवलं वृद्धिं नीतं किंतु व्यवहाराभिमुखं च कृतम् । ग्रन्थालयशास्त्रम् अधिकृत्य मराठी-भाषायां तेन लेखग्रन्थादीनां बहुतरं लेखनं कृतम् । भारतीयभाषासु अपि एतत्शास्त्रविषयकग्रन्थानां परिमितत्वात् तस्य एतत् कार्यं विदुषां प्रशंसास्थानं जातम् इति न आश्चर्यस्य विषय: ।

एवं पञ्चविंशतिवर्षाधिककाल: ग्रन्थालयकार्ये विविधप्रवृत्तिपरेण अनन्यमनसा एव तेन यापित: । अत: तस्य सेवानिवृत्तेरनन्तरम् अपि तस्य कार्यरति: अकुण्ठिता अखण्डिता च भवेत् इत्यर्थं तस्य दीर्घायुरारोग्यप्राप्ति: स्यात् इति एव आशास्यम् ।

डी.जी.टी. प्रशाला  
मुंबई ४

पु. म. गाडगीळ, एम्.ए.बी.टी.  
अध्यापक:

# श्रीजगद्गुरुमहासंस्थानम्, शारदापीठम्

शृङ्गेरी–कडूर (मैसूर)

के. कृष्णभट्ट बी. एस्सी.
व्यक्तिगतसचिवः

दि. १५–५–६९

सादरा विज्ञप्तिः ।

भवद्भिः सभक्तिश्रद्धं लिखितं विज्ञप्तिपत्रम् अस्माभिरधिगतम् । यथावसरं श्रीजगद्गुरुचरणारविन्दयोः निवेदितं च । तत्रभवतां विद्यावाचस्पतीनां पण्डितप्रकाण्डानां दत्तात्रेयशास्त्रिणां कवीश्वराणां षष्टचब्द-पूर्तिमहोत्सवः सपरिकरः तद्विधेयवर्गैः ज्येष्ठे मासि शुक्लचतुर्थीतः षड्-दिनपर्यन्तं महता वैभवेन निर्वर्तिष्यत इति भवदीयात् पत्रतोवगत्य नितरां सन्तुष्टान्तरङ्गाः श्रीशारदा-चन्द्रमौलीश्वर-प्रसादरूपम् एकशतं रूप्य-काणाम् अन्वगृह्णन् श्रीजगद्गुरुचरणाः । आशासते चायं षष्टचब्दपूर्ति-महोत्सवः श्रीशारदाचन्द्रमौलीश्वरयोः अमोघेन करुणाकटाक्षपातेन निष्प्र-त्यूहं निर्वर्त्यतां ते च कवीश्वराः तद्विधेयवर्गाश्च श्रेयःपरंपराभाजनं भूया-सुरिति । श्रीशारदाकुङ्कुमप्रसादः आशीर्मन्त्राक्षताश्च प्रेषिताः ।

इति सादरा विज्ञप्तिः

शृङ्गेरी

के. कृष्णभट्टः

---

# श्रीशारदापीठम् द्वारका

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीणाद्य-नेकबिरुदविभूषित-श्रीद्वारकाशारदापीठाधीश्वर-जगद्गुरुश्रीशंकराचार्य-श्रीमद्-अभिनवसच्चिदानन्दतीर्थस्वामिभिः श्रीकवीश्वरदत्तात्रेयशास्त्रि-षष्टचब्दिपूर्तिसत्कारविषये प्रत्यग्ब्रह्मैक्यानुसंधानसमन्विताः श्रीनारायण-स्मरणसंसूचिताः शुभाशिषः समुल्लसन्तुतराम् ।

भवाद्भिः क्रियमाणोऽयं समारम्भः शुभंकरः ।
निरन्तरायश्चलतु भूयाच्च सफलो भुवि ॥
श्रीद्वारकाधीश्वरचन्द्रमौलिश्रीशारदाम्बाकरुणाकटाक्षैः ।
शिष्योत्तमानां हि भवादृशानां भवन्तु भूयांस्यपि मङ्गलानि ॥
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखमाप्नुयात् ॥

श्रीः

## कूडली-पीठ-'श्री'-चरणेभ्यःमङ्गलाशीर्वादाः

**श्रीविद्याशङ्करगुरुः प्रसीदतु**

श्रीमत्परमहंसेत्यादिबिरुदावलिविराजमानदक्षिणाम्नाय-श्रीकूडली-शृङ्गेरी - श्रीजगद्गुरुपीठाधीश्वर - श्रीविद्याशङ्करदिव्यपादपद्माराधक - श्रीविद्याशङ्करभारतीस्वामिभिः अस्मदत्यन्तप्रियशिष्य-कवीश्वराभिजन-श्रीदत्तात्रेयशास्त्रिवर्याणां विषये षष्टिहायनोत्सवसमारम्भसमये विरचितशुभाशीःपुरस्सराः नारायणस्मृतयो विलसन्तुतराम् ।

वयमस्मिन् तिलवल्लीग्रामे ऐषमो ज्येष्ठशुक्लसप्तमी भार्गवपर्यन्तं पीठधर्मान् प्रचारयन्तः स्वाश्रमोचिताचारपरायणाः उपनिषद्धर्मप्रतिपाद्य-श्रीमच्छङ्करभगवत्पादाद्वैततत्त्वानुसन्धानपुरस्सरं शिष्यान् स्वोचित-धर्मान् उपदिशन्तः तिष्ठासामः । सम्प्रति भवत्परिचितैः शिष्यसुहृदादिभिः महता समारोहेण सोत्साहं विधित्सितं भवतां षष्टिसंवत्सरपूर्तिपिशुनं नैकसत्कर्मकलापाङ्गपरिबृंहितं विविधविद्वदुपन्याशास्त्रचर्चादिज्ञानकाण्ड-भागपरिकर्मितं च समारम्भं शुश्रूषमाणाः निरतिशयमानन्दमनुविन्दामः । सद्धर्मोपदेष्टृणां सदाचारनिष्ठागरिष्ठानां षड्दर्शनीपारदृश्वनां श्रीमत्स-दृक्षाणाम् अरिष्टनिबर्हणक्षमम् एतादृशम् अनुष्ठानं नितरां श्रेयसे सम्भ-वत्, भवतां सर्वाङ्गीणं शिवं वितनुयात्, समेधयेच्च पूर्णमायुरैश्वर्यादि-कञ्चेति श्रीमद्विद्याशङ्करचरणयोरविरतम् आशास्महे ।

संस्थानप्रतिनिधिद्वारा साक्षात् प्रेषितान् प्रसादाक्षतान् स्वीकृत्य कार्तार्थ्यम् आवहन्त्विति शिवम् ।

इति नारायणस्मृतयः

---

।। श्रीमङ्गलमूर्तिः शरणम् ।।

**व्रतैर्यज्ञैस्तपोभिश्च दानैस्तीर्थैश्च कोटयः ।**
**भवन्ति येषां पुण्यानां तेषां बुद्धिः प्रजायते ।।**

(गणेशपुराणे)

श्रीमद्विद्यावाचस्पति - शास्त्रनिधि - प्रमुख - बिरुदावलि - बिभ्राजमान-सदाचरणपरायण - श्रुतशीलवृत्तसम्पन्नतम - श्रीकवीश्वराभिजनललामायमान - ब्रह्मश्रीढुण्ढिराजमहाराजात्मज - श्रीदत्तात्रेयशास्त्रिसत्तम - पादपाथोजयोः सप्रणिपाततति सप्रश्रयभक्ति सबहुमानोन्नति च समर्प्यमाणं

# ।। सम्माननपत्रम् ।।

कमनीयकर्माणः कोविदचूडामणयः !

इदमिदानीं समर्प्यते सश्रद्धं सहाञ्च हृद्गतं प्रकाशयद्भिः संस्तुत-शिष्यप्रशिष्यभुजिष्यादिभिः, सन्मान्यगुणसुमनःसंदृब्धं सपत्रं सहस्रपत्रं, जनुषः षष्टितमायां समायां पुरुषायुषस्यार्धे पदमादधानेषु सद्गुणनिधानेषु तत्रभवत्सु भवत्सु, सोत्साहमस्मिन्नुत्सवप्रसङ्गे सत्सङ्गे पुण्यपुरोत्सङ्गे भगवतः सर्वमङ्गलाधवस्य मङ्गलमूर्तिसहकृतस्य गङ्गोत्तमाङ्गस्य दयातरङ्गतः ।

वीतरागादिदोषाद्दोषज्ञवराः !

महाकुलकवीश्वरकुले लब्धजन्मानो भवन्तः शैशवादेव सद्गुरूपसत्त्या देवद्विजगुरुवरिवस्यया च दुरापं मुख्यं विद्यातपः समर्जयन्तः सद्ब्रह्मचर्यव्रतेन "तद्धि तपस्तद्धि तपः" "य एवं विद्वान् स्वाध्यायमधीते" इत्यादिश्रुति "वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते । यज्ञानां तपसाञ्चैव शुभानां चैव कर्मणाम् । वेद एव द्विजातीनां निःश्रेयसकरं परम् ।।" इत्यादिस्मृत्यर्थं सदाचारं चान्वर्थकयन्तो धीमन्तः साङ्गम् आम्नायम् अधीत्य प्रतिभावैभवेन पुनर्गूढतत्त्वग्रन्थग्रन्थिलानि शास्त्राणि "वेदार्थान् अधिगच्छेत्तु शास्त्राणि विविधानि च ।" इति न्यायेन मीमांसातर्कोपष्टम्भानि निरवष्टम्भम् उपलभ्य सत्वरमेव सात्त्विकविद्वद्वरपदवीमात्मानमध्यजीगमन्निति हन्त! कृतार्थः प्रथमाश्रमः श्रीमतां

विजितेन्द्रियग्रामाणां ग्राम्यविषयदोषान् विमृशताम् । अतः खल्वात्त-धर्ममूर्तीनां विश्वविश्रुतकीर्तीनां श्रीदत्तावतारमहामहिमकर्मन्दिवन्द्य-श्रीवासुदेवानन्दसरस्वतीमहास्वामिप्रभृतिमहात्मनां करुणैकशरणताम् अन्वविदन् अत्रभवन्तः ।

श्वसच्छास्त्रविग्रहाः ! शास्त्रिप्राग्र्याः !!

यच्च गृहमेधितायां श्रीमद्भिः स्वाश्रमोचितान् कर्मकलापान् अन्वहम् अनुतिष्ठासद्भिरेव "वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं तपः । तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥" इत्यभियुक्तोक्ति प्रमाणीकृत्य कृत्यविदः सद्व्रत्याः शिष्यव्राताः पारेसङ्ख्यं सङ्ख्यावदग्रण्योऽगण्यगुणाः पुण्यप्राप्येनाध्यापनेन जनुःसाफल्यम् आपादिताः, तत्सन्ततमेव सतोषं स्मरन्ति भवदुपकृतिभरं धीरपरम्पराम् अवाप्तास्ते प्राज्ञाः । अद्यापि ननु दोधूयन्ते भवद्यशःपताकास्तत्तज्जगद्गुरु-श्रीकाञ्चीकामकोटि-शृङ्गगिरिशकटपुरसङ्केश्वरद्वारकादिपीठपरिवृढैस्तथा राजकीयाधिकारिभिस्तत्तत्संस्थासंस्थैः सद्भिश्चातुषाराद्रेरा चावाचीसमुद्रात्सप्रौढिप्रवर्त्यमानासु पण्डितप्रकाण्डमण्डितासु संसन्मण्डलीषु श्रीमद्भिर्विहिताः षड्दर्शनीचर्चाः पूर्वपक्षसिद्धान्ततान्ता इति सन्तन्तनीति सन्तोषं स्वान्तस्य भवत्संस्तुतसार्थसार्थवाहस्य कस्यापि सचेतसः ।

रसत्सरस्वतीका रस्यगुणाः अन्तर्वाणिमणयः !

भवदीयाम् अवाङ्मुखसम्मुखीकरणविचक्षणाम् असाधारणीं वाङ्मुखधोरणीं विविधग्रन्थरचनासरणिञ्च श्रवणरसायनायमानाम् आसेवमाना मानातिशायिसौहित्यम् उपदेशसाहित्यरसेनासाद्यानवद्यकर्माणो नैके सद्वर्त्मानः संवृत्ता इति यत् त्वद्वित्तगुणानां विधूतावगुणानां श्रीमतां वाचोऽनुगुणं पवित्रं चारित्र्यं तदानुकूल्यावहं चित्तवैमल्यं विवेकवैशारद्यं च हृद्यमवबोधयति नूनं सन्निहिततराणां विनेयानां हितावहम् अकैतवम् ।

## प्राज्ञाः !

तत्किल कालेयेऽस्मिन् कराले काले दुरवापेण दशविधविप्रेषु पुराणोदितेषु

"वेदशास्त्रार्थतत्त्वज्ञः देवो विप्रः स उच्यते ।
कृत्याकृत्यविशेषज्ञः स विप्रो मुनिरुच्यते ।

षट्कर्मनिरतो नित्यं देवतातिथिपूजकः ।
स्वाध्यायनिरतः साधुः स विप्रो द्विज उच्यते ।"

इत्येवंविधेषु श्रेयस्तमदेवद्विजविप्रत्वेन परिष्कृताः श्रीमन्तो

"न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तम् इमे चोभे तद्धि पात्रं प्रकीर्तितम्"

इति याज्ञवल्क्यगिरा कथङ्कारं नु सत्कारपात्रतां न भजन्ताम् ?

एवं च साज्जन्यजन्यां दैवीं सम्पत्त नयविनयावाप्तिभगवद्भक्ती च द्वारीकृत्य साधुधुरीणताम् आसन्नाः अत्रभवन्तः

"प्रियप्रायावृत्तिर्विनयबहुलो वाचि नियमः ।
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं ।
रहस्यं साधूनामनुपधि विशुद्धं विजयते"

इति महाविभूतेर्भवभूतेराशयस्थं साधुरहस्यं प्रत्यक्षरं सफलयन्तः समेषां भवत्सान्निध्यजुषामास्तिकप्रवेकानां श्रेयःसाधनपट्वीं पद्यां प्रदर्शयन्तो निरन्तरम् उत्तरोत्तरं पुरुषायुषेणारोग्यभाग्यादिना च परीता दुरितपराभूतिशमादिसम्पत्तिसर्वात्मानुभूतिभिर्योगिचर्याभिः साधनानुपूर्वीभिः समुत्कर्षसोपानम् आरुह्य प्रद्योतयन्तां भवन्तः प्रदीपेनेव विवेकोपदेशेन प्रमादमोहसुषिरप्रसरां वसुन्धराम् इति भगवन्तं भूतभावनं श्रीभवानीजानिं सभक्तिप्रणामस्तोमं प्रमथनाथम् अनुनाथामहे ।। इति शिवम् ।।

श्रीशाके भूनवत्युत्तराष्टादशशतात्मके ।
सौम्याब्दे शुक्रशुक्लाष्टमीने वारे पुणेपुरे ।।१।।
समर्पि शास्त्रिपञ्चास्यचरणार्णोजयोरिदम् ।
तुष्यन्तु शास्त्रिणस्तेन जीवन्तु च शरच्छतम् ।।२।।

**श्रीमद्विधेयाः महाराष्ट्र - कर्णाटकवासिनः**

**भगवद्भक्ताः ५१ संस्थासंचालकाः**

पुण्यपत्तनम् ज्येष्ठ शु. ८, ८९१ शाके, रविवासरे, २५ मे १९६९

ज्येष्ठ शु.१०,१८९१ ॥ श्रीगणेशदत्तगुरुभ्यो नमः ॥ श्रीनृसिंहवाटिका

अयि अध्यक्षमहोदयाः ! सभास्ताराश्च !

विद्यावाचस्पति-कवीश्वर-कुलावतंस-श्रीदत्तात्रेयशास्त्रि-सत्कारसु-समयेऽस्मिन् अभिनन्दनात्मकं किंचित्प्रस्तूयते। परमपूज्याध्यक्षयोगिराज-श्रीगुळवणीमहाराज-प्रयुक्त-श्रीदत्तात्रेयशास्त्रि-कवीश्वर-सत्कारो नाम श्री. प. प. श्रीमन्नृसिंहसरस्वती-दीक्षितस्वामि-महाराजकृत-सत्कार-फल-स्वरूप एवायम् इत्यत्र न संदेहः। श्रीमहाराजकृतसत्कारोऽमरापुराख्यग्रामे श्रीमद्भागवत-सप्ताहविरामकाले महावस्त्र-श्रीफल-प्रसाद-प्रदानेनाजनि।

श्रीदत्तात्रेयशास्त्रिवर्याणां सौपर्वाण्याः प्राथमिकोऽभ्यासस्तु श्रीनृ-सिंहवाटिकायामेव श्रीपूज्यपाद जगद्गुरुशंकराचार्य (जेरे) संनिधौ ततः धारापुरस्थ पण्डितप्रकाण्ड-गुरुवर्य-नागेशशास्त्रिणः सविधेऽजनि। आबा-ल्यात् तत्पितृचरणानां कवीश्वर कुलभूषणढुण्डिराजमहाराज-मार्गदर्शनं पवित्रतमम् आसीदेव। श्रीदत्तात्रेयशास्त्रि-पितामहोक्तवक्रतुण्ड-महाराजा-नामेव विद्यावाचस्पति श्रीदत्तात्रेयशास्त्रिवराः द्वितीयावतार इति निश्चि-नोमि। श्री.प.प. श्रीवासुदेवानन्दसरस्वती-श्रीमौनिस्वामि-महाराजादिभिः पुण्यपुरुषैरनुग्रहीतमेतत् कवीश्वरकुलम्। पूर्वमेव श्रीमयूरेश-प्रसादोऽस्मिन् कुले। विशेषस्तु परमपूज्य-योगिराज-श्रीगुळवणीमहाराजानां कृपाछत्रं वरीवर्ति। अस्मदीय-महद्भाग्यवशादेव श्रीदत्तात्रेय शास्त्रिश्रेष्ठानां सतीर्थ्यम् उपलेभे। यैर्बाल्ये क्रीडितम्। सार्धमुषितम्। समं लीलया विहसितम्। साकं पठितं प्रलपितम् अशितञ्च ? इदानीं पूर्वप्रसंगस्मरणजनितानन्दाति-शयेनेन्द्रियव्यापारशून्यताम् अनुभवति चेतः। श्रीदत्ताशास्त्रिवर्य-सत्कारो-दन्तश्रवणसमकालमेवानन्द-पराकाष्ठाम् आरोहति मानसम्। नायं विस्तारकाल इत्यलं पल्लवितेन। परन्तु मनीषैका समुल्लसति। श्रीमद्-दत्तात्रेयः विद्यावाचस्पतिश्रीदत्तात्रेयशास्त्रिवर्येषु विपुलम् आयुरारोग्यं च वितरतु जनतासेवायै। इति श्रीशं प्रार्थये।

भोः श्रीदत्तात्रेयशास्त्रिणः !

अहमिह स्थितवानपि तावकः। त्वमपि तत्र वसन्नपि मामकः ॥
न तनुसंगम एव सुसंगमः। हृदयसंगम एव सुसंगमः ॥

सादरं, सानुनयं, सप्रणामं, साञ्जलिबन्धं, सर्वगुरुजनेभ्यो नमांसि।

कोडणीकरोपाह्वो बापूशास्त्री

## ॥ शिवाजीसदृशो राजा न भूतो न भविष्यति ॥

चकास्ति भीमरथी-समीपे बीजापुरी-नामक-राजधानी ।
विभाति या भारत-दक्षिणाशा सौभाग्यलक्ष्मी इव चोल्लसन्ती ॥
बभूव तस्यां यवनान्वयेषु जातो नृपो वैदिक-धर्म-हन्ता ।
येनाऽखिला यज्ञविभागभोगे देवाः कृता वै विमुखा तदानीम् ॥
शहाजिनामा मरहट्टवीरः सत्क्षत्रियस्तस्य धराधिपस्य ।
यः शौर्यबुद्ध्यादिगुणावतारै राज्ये प्रतिष्ठां महतीं जगाम ॥
जिजाइ-नाम्नी खलु तस्य पत्नी या सत्क्रिया मूर्तिमती धरासु ।
गोब्राह्मणानाम् अहितं विलोच्य सा चैकदा प्राह पतिं सुवीरम् ॥
प्रभो भवान्नार्हसि धर्महन्तुः कुवृत्तिसेवासु धराधिपतस्य ।
उच्चासनोपासनमत्र मन्ये स्वदेशनाशाय तव प्रयत्नः ॥
'रुजं महाराष्ट्रजनस्य चाहं धन्ये कथं छादयिताल्पजन्तुः ।
इत्थं शहाजी नरशार्दुलोऽपि विचारयित्वा वचनं जगाद ॥
निशम्य भर्तुर्वचनं जिजाई शोकाकुला चाशु जगाम दुर्गम् ।
शिवाइ-देव्याः सविधे सुधीरा संप्रार्थयामास च देवतां ताम् ॥
हे देवि भक्तोद्धरणानुरक्ते ! निरीक्षसे किं न रुजं जनस्य ।
अवश्यश्लाघ्यो यवनेश्वरोऽसौ यो यातुधर्मा क्रमते दिगन्तम् ॥
यः साधुकामैरुपतिष्ठते त्वां प्राप्नोति चेष्टं यदि शैलपुत्रि ।
धर्मस्य गोप्ता सुजनार्तिहन्ता मां देहि देशोद्धरणाय पुत्रः ॥
'गर्भे त्वदीये रुचिरं वरेण्यं जनिष्यते शैलसुतानिधानम् ।
इत्युन्नता वागशरीरिणी वै तदागता मोहमयी नभस्तः ॥
सा क्षत्रिया दिव्यशरीरिणीं तां निशम्य वाचं मुमुदे नितान्तम् ।
गत्वा गृहं हर्षभरेण पत्ये शशंस देव्या वरदप्रसादम् ॥
परप्रसादात् परमेश्वरीणां गोब्राह्मणाशीर्वचनैः जिजाई ।
निजेप्सितं गर्भमधत्त दिव्यं शहाजिराजानुमतानुमन्त्री ॥
कालेन तां दुःसहदुःखदग्धां भूमातरं मोचयितुं महेशः ।
आविर्बभूवाऽत्र शिवाजि-नाम्ना नरस्वरूपेण नरेन्द्रवंशे ॥
राष्ट्रे महाराष्ट्रपदाभिधाने शहाजिवीरेश्वर-धर्मपत्नी ।
जिजाइदेवी नररत्नभूतं जगत्पवित्रं सुषुवे कुमारम् ॥
कालेन तां दुःसहदुःखदग्धां भूमातरं मोचयितुं च दास्यात् ।
बाल्यात् शिवाजी निजधर्मदीक्षां लेभे स्वयं मातृपदारविन्दात् ॥

# शुभाशीर्वादाः

विद्वन्, पण्डित, भो अनन्ततनय-श्रीमद्वसन्त प्रिय ।
आयुष्यं तव गाडगीळ भवतात् सारोग्यमन्तं विना ।।
सौभाग्यं तदखण्डितं भवतु ते हे पण्डिते शारदे ।
पुत्रो वां गिरिशः शिरीषतनयः प्राप्नोतु कल्पायुषम् ।। १

सौम्योऽयं नववत्सरस्तव तथा ते मण्डलीनां शुभः ।
भूयान्मित्रगणस्य ते तव तथा सत्पाक्षिकस्याऽपि सः ।।
भूयात् संस्कृत-शारदा शतगुणं वृद्धा प्रचारेण सा ।
दीर्घायुर्धन-कीर्ति-वृद्धिमपि तां देयादयं वत्सरः ।। २

शारदाम् उद्दिश्य —

भर्तुस्ते प्रियवस्तुवंश सरसा या संस्कृता शारदा ।
अर्धाङ्गी च वसन्तराजविदुषस्त्वं पण्डिता शारदा ।।
नूनं मे प्रतिभाति पूर्वजनिसंस्कारैर्वसन्ताऽलयम् ।
युष्मत्स्वसृयुगं तमेव विदुषं संसेवितुं ह्यागतम् ।। ३

चैत्र शुद्ध १, १८९१

— विष्णु विट्ठल इनामदार
विधिज्ञः विटे (साङ्गली)



निर्मूल्यमुन्मूल्य च दुष्ट-लोकान् नृपीभवद्दैत्यदरेश्वरब्रुवान् ।
तपापनोदार्थमसौ स्वदेशे ह्येकातपत्रं विदधे स्वराज्यम् ।।

अष्टावधानी सेनानी प्रजासागरचन्द्रमाः ।
शिवाजी-सदृशः कोऽपि न भूतो न भविष्यति ।।

धर्मसंस्थापको धीमान् प्रसन्नो युगपूरुषः ।
महामानवरूपेण विचचार महीतले ।।

कौटिल्य-कल्पना-मूर्तिः सज्जनानां सुहृत्तमः ।
शिवाजीसदृशः कोऽपि न भूतो न भविष्यति ।।

यस्य ज्ञान तपः प्रजासु सततं दाक्षिण्यमेकाग्रता ।
वैराग्यं विरतिः ह्यसन्नियमनात् षष्ठांशवृत्तिः स्थिरा ।।
सौख्यं प्रकृतिरञ्जनागतसुखं धर्मासनं स्वासनम् ।।
तस्यैतस्य शिवप्रभोः पिबत वै पुण्यं चरित्रामृतम् ।।

बडोदा

पं. शिवकुमार नेवासकर

वृद्धं पण्डितरावं तं शिवप्रतिनिधिं द्विजम् ।
नवप्रश्रयनम्रोऽसौ जयसिंहोऽब्रवीद् वचः ॥६५॥
" प्रीतोऽस्मि वचसाऽनेन स्वामिनस्तव धीमतः ।
नाकर्णितः खलु क्वापि सद्विवेको मयेदृशः ॥६६॥
विना पुण्येन लोकेऽस्मिन् काले च कलिदूषिते ।
निष्कामकर्मयोगित्वं संभवत्येव नेदृशम् ॥६७॥
धृतराष्ट्रेन कृष्णोक्तो बोधः संजयतः श्रुतः ।
मयाऽद्य शिवराजोक्तो भवत्तस्तादृशः पुनः ॥६८॥
चिरस्य दास्यसंभूतो व्यामोहो मे लयं गतः ।
विशुद्धभावगम्भीरं श्रुत्वेदं शिववाचिकम् ॥६९॥
लोकोत्तरचरित्रं तं स्वामिनं ते विवेकिनम् ।
मिथोऽत्र द्रष्टुमिच्छामि विप्र ! केनापि हेतुना ॥७०॥
यथा प्रियतमो लोके रामसिंहो ममात्मजः ।
तथा वाऽथ ततो नूनं शिवराजो मतोऽधुना ॥७१॥
स ममावासमभ्येतु शस्त्रहीनो विना भयम् ।
अरातिष्वपि कापट्यं राजपूता न कुर्महे ॥७२॥
इत्युक्त्वा प्रददौ तस्मै सत्यत्वप्रतिबोधनम् ।
तुलसीबिल्वपत्राणां पुञ्जं देवार्चनार्पितम् ॥७३॥
तं पत्रपुञ्जमतिपूततमं स्वमूर्ध्नि
संस्पृश्य स द्विजवरो रघुनाथनामा ।
तद्दर्शनोत्सुकममुं प्रियदर्शनं च
प्राप्तः शिवं प्रति यथावसरं सुखेन ॥७४॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये जयसिंहप्रबोधनम् नाम ४९ तमः सर्गः समाप्तः ॥**

# श्रीशिवराज्योदये महाकाव्ये ५० तमः सर्गः

## जयसिंहाभिप्रायः

अथापरेऽह्नि प्रयतो भवानीं प्रणम्य भक्त्या जननीं च पूज्याम् ।
तं द्रष्टुकामो जयसिंहराजं शिवः प्रयाणाभिमुखो बभूव ॥१॥
सोऽनुप्रयातो रघुनाथपन्तमुख्यैर्द्विजैः सप्तभिरात्मनीनैः ।
मेने जनस्तं पथि वीक्ष्य वन्द्यं शिवं हि सप्तर्षिगणानुयातम् ॥२॥
नृवाह्ययानान्यधितस्थिवांसः ते प्रापुरारादरिसैन्यवासात् ।
तत्कालमेव प्रसृता समन्तात् साश्चर्यभूता बत किंवदन्ती ॥३॥
शिवाजिरायाति समीपमेवेत्यत्यद्भुतं वृत्तमदो विदन्तः ।
चकम्पिरे केचन केचिदन्ये प्रस्विन्नगात्रा अभवन् प्रवीराः ॥४॥
समुत्सुकाः केचन वीक्षितुं तं प्रख्यातकीर्तिं जगदेकवीरम् ।
समीपगं वीक्ष्य तु कम्पिताङ्गा हठान्न्यरुन्धन् हृदये दिदृक्षाम् ॥५॥
गत्वाऽग्रतोऽसौ रघुनाथपन्तः सुहृत्परीतं जयसिंहराजम् ।
कृतप्रणामो निजगाद मन्दं स्वामी स्वयं प्राप्त इहेति राजन् ॥६॥
आकस्मिकं वृत्तमदो निशम्य सर्वेऽप्यधीरा हृदये बभूवुः ।
आश्चर्यविस्फारितलोलनेत्रा अन्योन्यमैक्षन्त चलाचलाङ्गाः ॥७॥
तेषामवोचज्जयसिंह एकः कथञ्चन स्तम्भितविक्रियोऽसौ ।
यत् सन्धिकामं शिवराजमेते द्रष्टुं वयं भूरि समुत्सुकाः स्मः ॥८॥
ततः प्रविष्टः पटमण्डपान्तरन्वीयमानः प्रियविप्रवर्यैः ।
अभ्युद्गतश्चानतराजपूतैः शुचिस्मितो धीरगतिः शिवाजिः ॥९॥
प्रवेश्यमानं शिवमुत्प्रसन्नम् अमी प्रवीरा जयसिंहमुख्याः ।
सभाजयामासुरतीव दक्षाः सप्रश्रयोत्थापनवन्दनेन ॥१०॥
पुरः सरन्तं निजधर्मबन्धुं रत्नावलीमण्डितहृत्कपाटम् ।
सस्नेहमाश्लिष्यदसौ शिवोऽपि सद्भावपूर्णेन हृदातिगाढम् ॥११॥
आलिङ्गनं तत् सहसा विलोक्य निसर्गधीरोऽपि स राजपूतः ।
स्मृत्वाऽफझुल्लस्य वधेतिवृत्तं स्थिरोऽपि कायेन हृदा चकम्पे ॥१२॥
महार्हरत्नैर्मधुगन्धमाल्यैः सुवर्णवस्त्रैः कमनीयशस्त्रैः ।
ताम्बूलदानैः सुरभिप्रसेकैः अन्योन्यसम्मानविधिर्बभूव ॥१३॥
ततः स शृण्वन् सततप्रवृत्तं पुरन्दरेऽस्त्रध्वनिमुन्नदन्तम् ।
जगाद धीरं शिव आत्मनैव राजन्! दत्तस्तव दुर्ग एषः ॥१४॥

नियुध्यमाना मम बान्धवास्ते प्राणप्रियाः युद्धहतावशेषाः ।
तवाज्ञया यान्तु सपद्यशेषा दुर्गाद् बहिः शीघ्रमविघ्नमेव ॥१५॥
तत्कालमेव प्रययौ सवेगं सेनाचरः कश्चन पत्रवाहः ।
चिरप्रवृत्तं रणदाववह्निं निर्वापयिष्यन्निव तोयवाहः ॥१६॥
ततः स राजा जयसिंहनामा भृशं प्रसन्नः शिवदर्शनेन ।
पृष्ट्वा सहार्दं हि कुटुम्बवार्तां मनोगतं स्वं निजगाद मन्दम् ॥१७॥
धन्या वयं नूनमिमे प्रकामम् ईक्षामहे यत् पुरतो भवन्तम् ।
भवादृशो निर्मलपुण्यशीलाः न दृक्पथं भाग्यमृते प्रयान्ति ॥१८॥
क्वाऽस्मन्निवासः क्व भवन्निवासः क्व चोद्यमो नो भवतः पुनः क्व ।
अभूतपूर्वेण परन्तु राजन् वैरेण नावद्य समागतौ स्वः ॥१९॥
न वैरभावो मयि लेशतोऽपि भवन्तमुद्दिश्य पवित्रशीलम् ।
सेवामयो हन्त तु दासधर्मः निष्पापकं पापविधौ नियुङ्क्ते ॥२०॥
आबाल्यतोऽसावमितप्रभावो दिल्लीश्वरो मे जगदीश्वरोऽभूत् ।
कायेन वाचा मनसेन्द्रियैश्च नक्तंदिवं संपरिसेवितश्च ॥२१॥
तत् पुण्यकार्यं भवतः समस्तं जानन्नपीदं नृपपीठनिष्ठः ।
इच्छन् भवद्भद्रमपि प्रकामं साम्राज्यविद्रोहमहं न कुर्याम् ॥२२॥
सार्धं मयाऽसौ च दिलेरखानो दिल्लीश्वरेण प्रहितोऽत्र देशे ।
समग्रसेनाधिकृतोऽपि नूनं मनाक् परायत्त इवास्मि कार्ये ॥२३॥
समस्तमेतद् भवतः स्वराज्यं विजेतुमव्याहतसंगरेण ।
साम्नाऽथवा सर्वहरेण वीर संप्रेषितोऽस्म्यत्र नराधिपेन ॥२४॥
आबाल्यतोऽहर्निशमेव राजन् युद्धेषु विध्वंसमयेषु यातम् ।
आयुर्मदीयं च तथा त्वदीयं प्रभूतचिन्तानलदग्धसौख्यम् ॥२५॥
न कामयेऽतः खलु युद्धमिद्धं सद्धर्मनिष्ठस्य तव स्वराज्ये ।
प्रदीयतां सामनिदानभूतं दिल्लीन्द्रसंतोषकरं प्रदानम् ॥२६॥
पुरन्दरः साकर-रुद्रमालौ-तिकोन-तुङ्गौ नर-रूप-मानाः ।
भण्डार-खण्डागल-सोन-लोहा-कोण्डाण-माणिक्य-पलाश-बरुताः ॥२७
इत्यादयस्ते गिरिशृङ्गसंस्थाः दुर्गास्त्रयोविंशतिरेव राजन् ।
वित्तं तथा पञ्चगुणाष्टलक्षं जानीहि दिल्लीपतितुष्टये स्यात् ॥२८॥
बालोऽपि पुत्रस्तव शम्भुराजः दीयेत सम्मानपदं महीयः ।
तदाधिपत्ये परितश्चरेयुः तुरङ्गमाः पञ्चसहस्रसंख्याः ॥२९॥
वीरश्च नेताजिरसौ त्वदीयः सेनापतिस्तत्प्रतिहस्तभूतः ।
अस्मिन् प्रदेशे विदधातु यत्नं दिल्लीन्द्रसाम्राज्यविवर्धनार्थम् ॥३०॥

एवंविधः सन्धिरमुष्य राजन् राजाधिराजस्य सुसंमतोऽस्ति ।
अकार्यकार्येषु विवेकभाजो मन्ये तथैवास्तु तवापि धीर ॥३१॥
अङ्गीकृतेऽस्मिन् समये समस्ते त्वया कथञ्चित् समयेऽधुना हि ।
सम्राडसौ दुर्धरशक्तिशाली त्वय्यप्रसन्नोऽपि भवेत् प्रसन्नः ॥३२॥
इत्थं वचस्तत् प्रतिकूलभूतम् आकर्ण्य धीरः स हि निर्विकारम् ।
सुदूरदर्शी स्मितपूर्वभाषी वक्ष्ये विमृश्येति जगाद मन्दम् ॥३३॥
दिनत्रयं तत्र सुहृद्गणेन संमन्त्र्य कालोचितमात्मकार्यम् ।
बलाबलं स्वं परमप्यवेक्ष्य तमेव सन्धिं बत सोऽनुमेने ॥३४॥
ततः शिवाजिं समरप्रवीणं तथा च नेताजिमुदग्रवीर्यम् ।
सहायमादाय ययौ विजेतुं विजापुरेशं जयसिंहराजः ॥३५॥
मार्गे तदीयान् विविधांश्च दुर्गान् अयत्नतः सानिकिनी जयन्ती ।
विजापुरं चापि सुरक्षितं तद् हठादिवाभ्याक्रमितुं प्रतस्थे ॥३६॥
तदा सुहृद्भूतममुं शिवाजिं कथञ्चिदुद्बोधयितुं स राजा ।
मिथो निशीथे सहसा जगाद हितेच्छया स्वाभिमतं विचारम् ॥३७॥
यद् वाचिकं मां प्रहितं पुरस्तात् सखे त्वया मङ्गलभावहृद्यम् ।
मुहुर्मुहुः संध्वनदन्तरङ्गे व्यामोहितं बोधयतीव तन्माम् ॥३८॥
दुष्पारतन्त्र्य-प्रहते हि राष्ट्रे स्वातन्त्र्यसंस्थापनमेव धर्मः ।
यत् त्वन्मतं वाचिकसारभूतं प्रत्यक्षरं तत् खलु सम्मतं मे ॥३९॥
स्वातन्त्र्यसंस्थापनधर्मकार्यं मित्र त्वया यत् कृतमेककेन ।
तन्म्लेच्छदास्येन मयाऽधमेन यत् खण्डयते तत् तुदते हृदन्तः ॥४०॥
अतोऽत्र कार्ये परमोपकारि किञ्चिद् विवक्ष्याम्यहमद्य बन्धो ।
सम्यग् विमृश्यात्महिताहितानि कर्तुं यथाभीप्सितमर्हसि त्वम् ॥४१॥
दुर्गप्रदानेन तवाऽधुना हि दिल्लीश्वरस्त्वय्यतिसुप्रसन्नः ।
स राजधान्यां यदि वीक्षते त्वां मन्ये भृशं प्रीततरश्च भूयात् ॥४२॥
मा तेऽस्तु शङ्का हृदि वाऽथ भीतिः औरङ्गजेबं प्रति संप्रयातुम् ।
त्वद्रक्षणे स्याद् भृशमप्रमत्तो मदात्मजस्तत्र हि रामसिंहः ॥४३॥
तथैव चान्ये मम राजपूता वशंगता ये सततोपकारैः ।
मदाज्ञया त्वत्परिरक्षणार्थं तेऽहर्निशं जागरिणश्चरेयुः ॥४४॥
मयाऽपि पत्रैर्बहुधा स सम्राड् अभ्यर्थितस्त्वामभिवीक्षितुं च ।
समीहते साम्प्रतमात्मनैव त्वद्दर्शनं दुर्लभदर्शनोऽसौ ॥४५॥
वीक्षस्व पृथ्वीपतिराजधानीं महासमृद्धया खलु यातिशेते ।
पुरीं मघोनोऽप्यमरावतीं तां किं वाऽलकां वैश्रवणस्य लङ्काम् ॥४६॥

स्वामागतं वीक्ष्य निजान्तिकेऽसौ मन्ये नितान्तं हि भवेत् प्रसन्नः ।
दद्याच्च सद्वीरवराय तुभ्यं सर्वंकषं दक्षिणदिक्पतित्वम् ॥४७॥
बालोऽपि पुत्रस्तव शम्भुराजो दिल्लीश्वरानुग्रहपात्रभूतः ।
नूनं तदैवात्मसुदैवयोगात् लभेत संमानपदं महीयः ॥४८॥
यामीहसे प्रार्जयितुं सखे त्वं रणश्रमेण क्रमशो नृपर्द्धिम् ।
तामश्रमेणैव हि सुप्रसन्नाद् विन्दस्व दिल्लीश्वरतः समग्राम् ॥४९॥
तत् प्रार्थये बान्धवसौहृदेन राजंस्तवात्यन्तहिताभिलाषी ।
अतः परं मद्वचसा प्रयाहि पृथ्वीपतेर्मङ्गलदर्शनार्थम् ॥५०॥
इति मतं जयसिंहनिवेदितं
तदवगत्य विमृश्य च सर्वथा ।
समभियातुमहो दिशमुत्तरां
हृदि विनिश्चितवान् सहसा शिवः ॥५१॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये जयसिंहाभिप्रायो नाम ५० तमः सर्गः समाप्तः ॥**

## ॥ श्रीशिवराज्योदये महाकाव्ये ५१ तमः सर्गः ॥

### राष्ट्रहितोपदेशः

अथ प्रभूतसैन्येन युध्यमानो विजापुरे ।
आक्रान्तः सहसा प्राप जयसिंहः पराजयम् ॥१॥
तेनात्यन्तमधिक्रुद्धो भुजङ्गम इवाहतः ।
वीरो दिलेरखानोऽसावुज्जगार विषं गिरा ॥२॥
शत्रुपक्षानुकूलोऽयं शिवाजिः कपटी महान् ।
अस्मत्सेनापराभूतेः स निदानं मतो मम ॥३॥
तमहं सदनाविष्टं विषन्धरमिव स्वयम् ।
निहन्मि च्छद्मना किं वा घातयिष्यामि घातकैः ॥४॥
ज्ञात्वा तादृगभिप्रायं दिलेरमविवेकिनम् ।
चिन्ताक्रान्तमना आसीज्जयसिंहो महामतिः ॥५॥
शिवाजिरपि तं पश्यन् रोषाविलविलोचनम् ।
इङ्गितज्ञः क्षणाज्जज्ञौ दिलेरं दूषिताशयम् ॥६॥
विनिर्यातुमना दूरं ततः सङ्ग्रामभूमितः ।
जयसिंहं जगादासौ निशीथे स्वमतं मिथः ॥७॥
राजन्नेकत्र संग्रामसुव्यग्रे प्रबले रिपौ ।
विषयेऽन्यत्र तस्यैव कर्तव्यः सहसाऽऽक्रमः ॥८॥
अप्यपारबलः शत्रुर्द्विधाक्रमणकुण्ठितः ।
अवशो हि वशं याति विन्दते वा पराभवम् ॥९॥
तदाक्रमितुमिच्छामि शत्रुनिघ्नमनुत्तमम् ।
तूर्णं पर्णालिदुर्गं तं यो मत्परिचितो दृढम् ॥१०॥
प्रत्युत्पन्नधियस्तस्य शिवस्येदं हि भाषितम् ।
चिन्ताकुलमतेरासीज्जयसिंहस्य सम्मतम् ॥११॥
सहस्रद्वयसंख्याकमश्वानीकं सुदुर्धरम् ।
समादाय प्रतस्थेऽसौ वायुवेगेन वीर्यवान् ॥१२॥
अविश्रान्तं प्रधावत् तत् सैन्यं शिवधुरन्धरम् ।
पञ्चभिर्दिवसैरेव प्राप्तं पर्णालपर्वतम् ॥१३॥
तत्र जन्यमभूद्घोरं निशीथेऽन्धतमोमये ।
प्रस्फुरत्करवालार्चिर्दृष्टोच्छलितशोणिते ॥१४॥

प्रबलेनारिसेनायाः प्रतीकारेण कुण्ठितः ।
रणभूमेर्विनिर्वृत्तः शिवो दुर्गान्तरं ययौ ॥१५॥
सङ्ग्रामान्ते समायान्तं नेताजिं वीक्ष्य तत्र सः ।
ईषद्रोषाभिभूतस्तं स्वाधिकारान्न्यवर्तयत् ॥१६॥
तमसाधारणं वीरं वृकयुद्धविशारदम् ।
स्ववशे स्थापयामास विजापुरनराधिपः ॥१७॥
लब्ध्वा तदीयसाहाय्यं नेताजी रणकोविदः ।
भृशं प्रपीडयामास जयसिंहवरूथिनीम् ॥१८॥
विशालदुर्गसंस्थोऽसौ शिवाजिरपि विक्रमी ।
स्वगणैः पीडयामास विजापुरवरूथिनीम् ॥१९॥
इति नीतिप्रयोगेण शिवराजस्य तादृशा ।
उभावपि रिपू म्लेच्छौ घोरामापदमापतुः ॥२०॥
ततो दिल्लीपतेराज्ञामवाप्य चिरमर्थिताम् ।
जयसिंहोऽर्थयामास शिवं पृथ्वीन्द्रदर्शने ॥२१॥
उचितानुचितं सर्वं सुविमृश्य हिताहितम् ।
अङ्गीचकार तां तस्य शिवः सविनयार्थनाम् ॥२२॥
ततो दूरप्रवासार्थी स स्वातन्त्र्यहितोत्सुकः ।
तद्वियोगाकुलानाप्तान् हितबोधमुपादिशत् ॥२३॥
"बान्धवा राज्यमस्माकं सर्वलोकहितैषिणा ।
आपन्नजनरक्षार्थं घटितं परमात्मना ॥२४॥
मयीतो निर्गते दूरं सहसा दिशमुत्तराम् ।
जिजादेव्या निदेशा वो भवन्तु पथदीपकाः ॥२२॥
स्वामिनो रामदासस्य युक्तायुक्तविवेकिनः ।
हितबोधमनुत्सृज्य हितमेव सदा भवेत् ॥२६॥
सेनानीः सैनिको मन्त्री नौपतिर्दुर्गपालकः ।
अधिकारपदं स्वं स्वं रक्षत्वामरणं दृढम् ॥२७॥
न लोभादथवा कामान्न भयान्नाऽथवाऽन्यथा ।
श्रद्धये विचलेज्जातु कोऽपि वः स्वस्वकर्मतः ॥२८॥
श्रुतिस्मृतिपुराणज्ञा ब्राह्मणा संशितव्रताः ।
न भजन्तु मनाग् भीतिं स्वराज्येऽस्मिन् कदाचन ॥२९॥
यतीनां भक्तियुक्तानां साधूनां वाऽथ योगिनाम् ।
आशिषः सततं ग्राह्या अभीष्टफलदायिकाः ॥३०॥

प्रजाहितं हितं राज्ञस्ततोऽन्यन्नैव किञ्चन ।
तदसिद्धौ वृथा तस्य ह्यायुःकीर्तिर्बलं धनम् ॥३१॥
पितृमात्रादिहीना वा नेत्रगात्रादिवर्जिताः ।
पुत्रवत् परिपाल्यास्ते परमेशकृपैषिभिः ॥३२॥
दुर्गोत्थितमिदं राज्यं सर्वथा दुर्गरक्षितम् ।
दुर्गा दुर्गालया नूनं सह्याद्रिशिखरस्थिताः ॥३३॥
धीराणां स्वत्वनिष्ठानां कार्याकार्यविवेकिनाम् ।
अल्पीयसामपि सतां संहतिर्हि गरीयसी ॥३४॥
क्षत्रियेषु स्थिता चण्डी ब्राह्मणेषु सरस्वती ।
सोद्यमेषु वणिक्ष्वेव लक्ष्मीः प्रकृतिचञ्चला ॥३५॥
पृथ्वीमूल्यानि रत्नानि महार्हवसनानि च ।
रसायनानि चित्राणि संचिन्वन्ति वणिग्जनाः ॥३६॥
अतः स्वराज्यनिष्ठानां कुलशीलवतां तथा ।
वणिजां संग्रहो राज्ये कार्यः सर्वसमृद्धये ॥३७॥
शूरहस्तगतं शस्त्रं तद् राज्यकवचं दृढम् ।
राज्येऽतः संग्रहः कार्यः शस्त्राणां शस्त्रिणां तथा ॥३८॥
उलूकवाहना पद्मा शारदा हंसवाहना ।
मृगेन्द्रवाहना दुर्गा जयश्रीर्हयवाहना ॥३९॥
उष्ट्रानीकं गजानीकं रथानीकं सुदुर्जयम् ।
न तुरङ्गमसैन्यस्य कलामर्हति षोडशीम् ॥४०॥
सुदृढं नौदलं यस्य स्वामित्वं तस्य सागरे ।
नानादेशस्थिता सम्पत् तं प्रत्येव प्रधावति ॥४१॥
अतो नैकविधा नावो नानाशस्त्रास्त्रपूरिताः ।
स्थाने स्थाने विधातव्या निजराज्याभिवृद्धये ॥४२॥
लोको जीवति धान्येन धान्यं तोयेन वर्धते ।
न विना तोयदैस्तोयं तद्वृष्टिर्न विना वनम् ॥४३॥
अतः प्रभूतयत्नेन वनानि विविधानि हि ।
रक्ष्याणि तुङ्गवृक्षाणि लोकजीवनमिच्छता ॥४४॥
रूपाजीवा विटाश्चेटा नर्तका गायका नटाः ।
वर्धयन्ते भोगवृत्तिं पौरुषं घ्नन्ति सर्वथा ॥४५॥
स्वधर्मस्य स्वदेशस्य स्वजनस्य हिताय च ।
ये निगूढमगूढं वा द्रुह्यन्ति स्वे परेऽथवा ॥४६॥

येन केन प्रकारेण तादृशा लोककण्टकाः ।
समूलघातं हन्तव्या निर्वास्या वा स्वदेशतः ।।४७।।

कुलीनाः कृतकर्माणो निरालस्या जितेन्द्रियाः ।
उच्चाधिकारं नेतव्या नीतिविज्ञा विचक्षणाः ।।४८।।

सेर्षा दुर्व्यसनाधीना मृषावाचोऽपहारकाः ।
अधिकाराद् विनिष्कास्याः सहसैवाधिकारिणः ।।४९।।

महतोऽपि हि राष्ट्रस्य परराष्ट्रावलम्बिनः ।
रक्षणे भरणे ज्ञाने समुत्थानं न शक्यते ।।५०।।

अतोऽल्पिष्ठमिदं राज्यं कृच्छ्रेण महतार्जितम् ।
परावलम्बितां जातु भजतां न कथञ्चन" ।।५१।।

इत्थं निजप्रियजनान् बहुधोपदिश्य
स्वातन्त्र्यरक्षणकृते नृपनीतितत्त्वम् ।
देवांस्तथा स्वजननीं च मुहुः प्रणम्य
दिल्लीश्वरं प्रति शिवः ससुतः प्रतस्थे ।।५२।।

।। इति श्रीशिवराज्योदये महाकाव्ये राष्ट्रहितोपदेशो नाम
५१ तमः सर्गः समाप्तः ।।

## ॥ श्रीशिवराज्योदये महाकाव्ये ५२ तमः सर्गः ॥

### शिवप्रकोपः

अथ फाल्गुनमासस्य नवम्यां सुदिने सुदि ।
शिवः सुहृद्वरैः सार्धं प्रतस्थे दिशमुत्तराम् ॥१॥
पथि तस्य निवासार्थं निर्जनासु स्थलीष्वपि ।
दिल्लीपतिनिदेशेन रचिता रम्यमण्डपाः ॥२॥
सर्वे त्रैवर्णिकाः शूद्राः ग्रामीणा नागरास्तथा ।
चित्रवेशा भिन्नभाषाः प्रसेदुः शिवदर्शनात् ॥३॥
तीर्थे तीर्थे कृतस्नानः समभ्यर्चितदैवतः ।
संश्रुतस्थानमाहात्म्यः स परां मुदमन्वभूत् ॥४॥
इतिहासपुराणेषु प्रसिद्धाः संगरस्थलीः ।
यत्र तत्र समालोक्य श्रुतपूर्वं समस्मरत् ॥५॥
उत्तीर्य भीमां गोदां च तपतीं नर्मदां नदीम् ।
विन्ध्यमुल्लङ्घ्य दुर्लङ्घ्यं प्राप चर्मण्वतीतटीम् ॥६॥
ततः श्रीकृष्णचन्द्रस्य जलक्रीडा-सुखप्रदा ।
कृष्णकान्तिमयी दिव्या तटिनी प्राप हृत्पथम् ॥७॥
स्मृत्वैव तां स सस्मार मात्रा बाल्ये निवेदिताः ।
बाललीला मुकुन्दस्य भक्तवृन्दमनोहराः ॥८॥
अनध्यस्तविवर्तस्य कृष्णस्य पदचिह्निताम् ।
ववन्दे शिरसा धूलीं कृष्णभक्त्यार्द्रमानसः ॥९॥
ततो वैशाख-राकायां यमुनातीर-संस्थिताम् ।
समायातः स निर्विघ्नमागराख्यां महापुरीम् ॥१०॥
आत्मजो जयसिंहस्य रामसिंहाभिधस्तदा ।
राजसेवाविधौ मग्नो न तं प्रत्युज्जगाम ह ॥११॥
यथोचितं तदातिथ्यं देवत्वमतिथेः स्मरन् ।
अकरोद् धर्मशालायां कश्चिद् गिरिधराभिधः ॥१२॥
अथान्येद्युः प्रववृते महाञ्जन्मदिनोत्सवः ।
नृपस्यौरङ्गजेबस्य राजनिष्ठाभिनन्दितः ॥१३॥
मध्याह्नसमये राजप्रासादस्थसभालयम् ।
निनाय चात्मना सार्धं जयसिंहात्मजः शिवम् ॥१४॥

नभश्चुम्बीनि चित्राणि हर्म्याणि धनिनां पथि ।
उद्यानानि च रम्याणि शिवः साश्चर्यमैक्षत ॥१५॥
आचारलाजैः कुसुमैः कुङ्कुमैर्दीपदर्शनैः ।
उपायनप्रदानैश्च लोकाः शिवमपूपुजन् ॥१६॥
स्वत्वाभिमानिनस्तत्र हिन्दवस्ते सहस्रशः ।
शिवं सभाजयामासुर्जय जीवेति गर्जितैः ॥१७॥
ततश्चोत्तुङ्गवप्राङ्कः प्रगाढपरिखायुतः ।
शोणवर्णो महाद्वारो नानारक्षकरक्षितः ॥१८॥
यमुनातटसंस्थोऽसौ प्रासादो म्लेच्छभूपतेः ।
प्रदीप्तारक्तनेत्रेण शिवेन ददृशे पुरः ॥१९॥
तत्र चौरङ्गजेबस्य द्रष्टुं जन्मदिनोत्सवम् ।
अहंपूर्विकया प्राप्ताः सर्वे साम्राज्यसेवकाः ॥२०॥
दुर्गपाला वणिग्वर्या अमात्या सैन्यनायकाः ।
नानादेश्या राजदूता विचित्रोष्णीषधारिणः ॥२१॥
सौवर्णवसनाः सर्वे रत्नालङ्कारभूषिताः ।
प्रसन्नवदना राजभक्त्याऽवनतमस्तकाः ॥२२॥
शिवस्यागमनं ज्ञात्वा सभायां सुप्रतीक्षितम् ।
सभ्या आश्चर्यवत् सर्वे सहसासंस्तदुन्मुखाः ॥२३॥
सम्राडौरङ्गजेबोऽपि दूरादालोकयन्नमूम् ।
दीप्तौजसाऽभवन्नूनं क्षणं प्रतिहतेक्षणः ॥२४॥
स च सिंहगतिर्वीरो धृतपुत्रकराङ्गुलिः ।
प्राप नातिचिरेणैव राजसिंहासनान्तिकम् ॥२५॥
सिंहासनाग्रतो दृष्ट्वा शिवाजिं सिंहविक्रमम् ।
शास्ताखानादयः केचित् भृशं हृदि चकम्पिरे ॥२६॥
देशकालविशेषज्ञः शिवस्त्रिरनमत् तदा ।
ईश्वरं पितरं चित्ते संस्मरन् मातरं तथा ॥२७॥
प्राभृतानि महार्हाणि ह्यात्मजस्य तथात्मनः ।
राज्ञे समर्पयामास राजरीतिं प्रपालयन् ॥२८॥
सोऽपि म्लेच्छमहाराजः समस्तं तदुपायनम् ।
पाणिस्पर्शेण जग्राह शिवमालोकयन् रुषा ॥२९॥
पदाधिकारी कश्चित् तं दविष्टमादिशत् पदम् ।
यत्रासन् नतमूर्धानो दासा म्लेच्छमहीपतेः ॥३०॥

जसवन्तसिंहप्रमुखांस्तत्रालोक्य पुरःस्थितान् ।
स्वराज्याक्रमणे भूयः निजसेनापराहतान् ॥३१॥
स्वत्वाभिमानी वीरोऽसौ विज्ञाय तमनादरम् ।
जगर्ज सहसा क्रुद्धः कम्पयन् राजमन्दिरम् ॥३२॥
रामसिंह ! विजानीहि य एतेऽत्र पुरःस्थिताः ।
मदीयवीरखड्गाग्रैः पृष्ठभागे प्रताडिताः ॥३३॥
विजापुरमहीपालस्तथा दिल्लीश्वरोऽप्ययम् ।
जाने सम्यग् विजानाति मत्कृपाणप्रदीप्तताम् ॥३४॥
नाहमिच्छामि राज्ञोऽस्य युक्तायुक्ताविवेकिनः ।
सभायामत्र संस्थातुं भीरवो यत्र मेऽग्रतः ॥३५॥
ताम्बूलमपि नात्रत्यं ग्रहीतुं कामयाम्यहम् ।
किं पुनस्तं हि संमानं जघन्यजनकाङ्क्षितम् ॥३६॥
बध्नन्तु राजदासा मां घ्नन्तु वा नचिरादिह ।
न पुरः स्थातुमिच्छामि नृपस्यास्याविवेकिनः ॥३७॥
इत्यूचिवान् प्रकोपेन खदिराङ्गारलोचनः ।
राज्ञः पराङ्मुखो भूत्वा बहिर्यातुं प्रचक्रमे ॥३८॥
अदृष्टपूर्वमौद्धत्यं शिवस्यालोक्य तादृशम् ।
चकिताश्चलिताः केचित् केचित् भीताश्च कम्पिताः । ३९॥
शास्ताखानादयः केचित् जानन्तस्तत्पराक्रमम् ।
राज्ञि संकटमुत्प्रेक्ष्य रक्षा दक्षा इवाभवन् ॥४०॥
सोऽपि म्लेच्छमहाराजो दृष्ट्वा सदसि सम्भ्रमम् ।
मेने दुःशकुनग्रस्तं निजजन्मदिनोत्सवम् ॥४१॥
रामसिंहस्तथा तस्य धाष्टर्यं पश्यन् ससाहसम् ।
सम्राजो रोषमुत्प्रेक्ष्य बभूव भयविह्वलः ॥४२॥
कथं रोषोऽपनेयोऽयमनयोरुभयोरपि ।
इति चिन्ताकुला तस्य मतिर्दोलायिताऽभवत् ॥४३॥
तदैवामुं समाहूय प्राह म्लेच्छमहीपतिः ।
किमकारणमेवाऽसौ कुपितो विपिनेचरः ॥४४॥
शिष्टाचारं न जानाति यतोऽसौ राजसंसदः ।
बहिर्यातु सुखेनैव त्वया सार्धमितोऽचिरात् ॥४५॥
रमादेशमनुप्राप्य शिवं प्रत्येत्य सत्वरम् ।
सादरं प्रार्थयामास निःश्वसन्तं मुहुर्मुहुः ॥४६॥

वीरवर्य ! महाराज ! यदत्रानुचिताप्रियम् ।
घटितं दुष्प्रमादेन तत् कर्तव्यं क्षमास्पदम् ॥४७॥
प्रदानं दानवीरस्य रणवीरस्य विक्रमः ।
दयावीरस्य करुणा क्षमा भूषा महात्मनः ॥४८॥
अलमत्रातिरोषेण सभायां जगतीपतेः ।
निवासभवनं शीघ्रं निर्गच्छावो यथागतम् ॥४९॥
तस्यानुरोधमनुमत्य तदा कथंचिद्
रोषातिरेकपरितप्तसमस्तगात्रः ।
दष्टाधरः सुदृढखड्गनिविष्टमुष्टिः
तत्याज तां यवनराजसभां शिवाजिः ॥५०॥

॥ इति श्रीशिवराज्योदये महाकाव्ये शिवप्रकोपो नाम
५२ तमः सर्गः समाप्तः ॥

## ॥ श्रीशिवराज्योदये महाकाव्ये ५३ तमः सर्गः ॥

## निर्बन्धपाशः

ततोऽपरेद्युर्जसवन्तसिंहो राजस्वसा जाफरमूर्तझाद्याः ।
शिवौजसा प्राक् परिदग्धसत्वा मिथो निशीथे नृपतिं प्रपन्नाः ॥१॥
तमब्रुवन् कृत्रिमसुस्मितास्ते सम्राजमेकैकश आत्मरोषम् ।
आकेकराक्षं जपचञ्चलोष्ठं शिवाजिचिन्ताकुलशेमुषीकम् ॥२॥
राजाधिराज! प्रथितोरुकीर्ते! समस्तभूपालनताङ्घ्रिपीठ!
इस्लामधर्मध्वजदिव्यचन्द्र! प्रचण्डसाम्राज्य! हताखिलारे! ॥३॥
तवाद्भुतेनैव महामहिम्ना लोकोऽखिलोऽयं सुखमेधतेऽत्र ।
बिभर्षि स त्वं नयनारविन्दे चिन्ताच्छटां हन्त विचित्रमेतद् ॥४॥
ह्यस्तेऽपि राजेन्द्र! महासभायां पाटच्चरः सह्यवनेचरोऽसौ ।
असह्यमौद्धत्यमचीकरद् यत् तन्नो नितान्तं तुदते हृदन्तः ॥५॥
स मूढधीर्वन्यजनाननेकान् उत्तेजनैर्भूरि सुसंघटय्य ।
छिनत्ति नित्यं कपटप्रयत्नैः मोहम्मदीयं जगदाधिपत्यम् ॥६॥
स वित्तकोषोऽहमदाख्यपूर्वपदे विशाले नगरेऽस्मदीयः ।
हिरण्य-मुक्तामणि-हीरकाढ्यस्तेनैव चौरेण पुरा लुलुण्टे ॥७॥
सेनाऽस्मदीया जसवन्तधुर्या विगाहमाना विपिनान्यवाच्याम् ।
निगूढमेतस्य हि वन्यदासैरकाण्डसम्पातमतीव जघ्ने ॥८॥
प्रविश्य निद्रासदनं निशीथे ह्यनेन कापट्यविशारदेन ।
त्वन्मातुलस्यापि हठान्निकृत्तं कराङ्गुलीनां त्रिकमुद्धतेन ॥९॥
सा सूरताख्या नगरी गरिष्ठा महाधनोत्तुङ्गसुरम्यहर्म्या ।
अनेन पापेन हृताखिलर्द्धिरङ्गारशेषा विहिता क्षणेन ॥१०॥
नैवास्मदीये नरदेव! राजसभालये केनचिदुन्मदेन ।
कदाचिदद्यावधि साभिमानम् औद्धत्यमाविष्कृतमप्रसह्यम् ॥११॥
हा हन्त किन्तु प्रथितापराधो राजेन्द्र! वन्यस्तव दुष्टशत्रुः ।
सभालये खल्वकरोद् गतेऽह्नि मर्मस्पृशं घोरतमापराधम् ॥१२॥
कृतापराधो बहुधा चिराय पुरे वसत्यत्र रिपुस्तवाद्य ।
स चेदितो याति विनोग्रदण्डं राज्यप्रतिष्ठा निखिलास्तमीयात् ॥१३॥
वचांसि तेषां स्वसुहृज्जनानां शृण्वन् स सम्राड् बत निर्विकारम् ।
कराङ्गुलिस्थां जपरत्नमालां संभ्रामयन् भूरि जहास मन्दम् ॥१४॥

जपव्रतस्थं तमभग्नमौनं मन्दस्मिताविष्कृतगूढभावम् ।
औरङ्गजेबं शिरसा प्रणम्य सर्वेऽपि ते स्वं स्वमगुर्निकेतम् ॥१५॥
अथापराह्णमुख एव तत्र स्वावासगेहं परितो भ्रमन्तः ।
सेनाचरा नैकसहस्रसंख्याः शिवेन दृष्टा यवनाः सशस्त्राः ॥१६॥
निमेषमात्रं हि विमृश्य दृश्यं स नीतिविज्ञः सहसा विजज्ञौ ।
आत्मानमावासगृहे सपुत्रं युक्त्या विनिर्बद्धमरातिनालम् ॥१७॥
रिपोरभिप्रायमवेत्य दुष्टं सहायहीनां च दशां स्वकीयाम् ।
संभाविनीमापदमूहमानः सुधीरसौ निर्हतधीरिवासीत् ॥१८॥
तं भ्रातृहन्तारमतिप्रचण्डसामर्थ्यवन्तं पितृघातनीचम् ।
क्रूरस्वभावं स्वरिपुं विमृश्य धीरः प्रकृत्याऽपि शिवश्चकम्पे ॥१९॥
तदैव संप्राप्तमवेक्ष्य पार्श्वे तं भ्रातृकल्पं जयसिंहपुत्रम् ।
शिवः प्रसन्नो नवनीरवाहं दावानलान्तर्गतकेसरीव ॥२०॥
शिवाजिमालिङ्ग्य च धर्मबन्धुं स रामसिंहोऽतिविशुद्धशीलः ।
चिन्ताजडाक्षोऽस्तमितस्मितास्यः प्रचक्रमे वक्तुमतीव मन्दम् ॥२१॥
"राजन्! विजानासि नरासुरोऽयं दिल्लीपतिर्दुष्करपापकर्मा ।
यः स्वार्थलाभप्रतिकूलभूतान् साम्राज्यलाभाय जघान बन्धून् ॥२२॥
दुर्मन्त्रिमन्त्रैर्विषबिन्दुतुल्यैः सुदूषितात्मा स निसर्गपापः ।
दूये नितान्तं गदितुं सखेऽहं त्वां हन्तुमिच्छत्यधुनाऽरिभूतम् ॥२३॥
ज्ञातं मया यत्क्षण एव बन्धो! चिकीर्षितं मित्रमुखेन तस्य ।
गत्वा द्रुतं संप्रणिपत्य भूयः प्रबोधितोऽसौ बहुधा दुरात्मा ॥२४॥
प्रोक्तं मया यत्पितृदेववाचि विश्वस्य यो दूरमिहाजगाम ।
स रामसिंहस्य हि जीवतो मे प्राणैर्वियुज्येत कथं शिवाजिः ॥२५॥
मदेकनिघ्नं यदि तं शिवाजिं हन्तुं प्रवृत्तोऽसि नरेन्द्र नूनम् ।
मद्रक्तशोणेन विनाऽसिनाऽसौ नान्येन शस्त्रेण हि घातितव्यः ॥२६॥
शपामि सत्येन हि रामचन्द्र-पवित्रवंशोत्तम-संभवोऽहम् ।
नात्याचरेद् नापि बहिश्च गच्छेत् शिवाजिरस्मिन् नगरे निवत्स्यन् ॥
तस्यात्मनीनस्य वचो निशम्य स्वबन्धुसंरक्षणसुव्रतस्य ।
निमील्य नेत्रे सुचिरं निदध्यौ शिवः कृपामात्मनि दीनबन्धोः ॥२८॥
उद्धृत्य संपूजितशम्भुलिङ्गस्थितानि सद्बिल्वदलानि भक्त्या ।
समर्पयन् पाणिपुटे तदीये सगद्गदां वाचमुवाच धीरः ॥२९॥
"अनाथनाथो जगदेकबन्धुः विपन्महासागरदिव्यसेतुः ।
ईशः स नूनं मम रक्षणार्थं तवैव रूपेण सखेऽवतीर्णः ॥३०

स्वधर्मसंरक्षण-युद्धसत्र-हविःसदृक्षं खलु जीवितं मे ।
न तत्क्षयं यास्यति विद्धि बन्धो ! विनेच्छया श्रीजगदम्बिकायाः ॥३१॥
वृत्तान्तमेनं झटिति स्वतातं निवेदय त्वं निजपत्रवाहैः ।
स एक एवास्ति समस्तदेशे म्लेच्छाधिपं बोधयितुं समर्थः ॥३२॥
तावत् सुतोऽयं मम शम्भुराजः सामन्तवत् प्राभृतपूर्णपाणिः ।
सार्धं त्वया भूपतिदर्शनार्थं सभालयं प्रत्यहमेव यायात् ॥३३॥
ततः स्वमुक्त्यै च कमप्युपायं स चिन्तयन् सन्ततमाकुलात्मा ।
यथावकाशं समहोपहारं ददर्श कांश्चित् सदमात्यवर्यान् ॥३४॥
स तन्मुखेनार्जवगर्भशब्दैः पत्रैरनेकैर्हृतजीविताशः ।
संप्रार्थयामास सदर्थनीयः म्लेच्छाधिपं तं कुटिलाग्रगण्यम् ॥३५॥
"हे राजराजेश्वर! सद्गुणाब्धे! दयाघनोपासनपुण्यशील!
न त्वत्समोऽन्यो धरणीतलेऽस्मिन् कृतापकारेष्वपि सोपकारः ॥३६॥
वसन विदूरे गिरिकाननेऽहं भूपालवर्य! त्वदनुग्रहेण ।
प्राप्तोऽसि नन्विन्द्रपुरेऽत्र भव्ये धरातलस्पर्शनमात्रभिन्ने ॥३७॥
यत् स्थावरं जङ्गममत्र लोके किञ्चिन्मदीयं धनमल्पशेषम् ।
तत् सर्वमेवाऽस्मि करोमि वन्द्ये तवाङ्घ्रिपीठे विनयोपहारम् ॥३८॥
याचे विनम्रोऽहमनन्तदोषः नानापराधानलदग्धचेताः ।
अपारकारुण्यमहाम्बुराशे प्रदीयतां मे बत जीवदानम् ॥३९॥
दिल्लीन्द्रसिंहासनभूरिनिष्ठः काङ्क्षामि नैवात्मसुखाय किञ्चित् ।
आदेशमिच्छामि परन्तु गन्तुं त्वदीयसाम्राज्यविवर्धनार्थम् ॥४०॥
बहिश्चरप्राणसमः सुतो मे यः प्रत्यहं राजसभामुपैति ।
साम्राज्यसेवाविधये पुरेऽस्मिन् वसत्वसौ मत्प्रतिभूः सुखेन ॥४१॥
यत् तत् प्रवृत्तं दिशि दक्षिणस्यां विजापुरैश्वर्य-विनाशि-युद्धम् ।
तत्रैव सेनाचरतां वलम्ब्य साम्राज्यवृद्ध्यै नितरां यतेय ॥४२॥
नाभ्यर्थनेयं मम संमता चेत् साम्राज्यसेवैकपरायणस्य ।
तद्दीयतां मेऽनुमतिर्महात्मन् वाराणसीक्षेत्रमितः प्रयातुम् ॥४३॥
संन्यस्य सर्वं सकलत्रपुत्रं काषायकौपीनधरोऽहमेकः ।
परं पदं प्राप्तुमथैश्वरं तद् घोरं चरिष्यामि तपः प्रकामम् ॥४४॥
ये मामकीना निवसन्ति नैके वीराः पुरेऽस्मिंस्त्वदनुग्रहेण ।
ते शीघ्रमेव प्रतियान्तु सर्वे त्वदाज्ञया सह्यवनप्रदेशम् ॥४५॥
फराडसिंहेन मदर्थमेव प्रोक्तं प्रतिज्ञावचनं तवाग्रे ।
प्रतिज्ञावचनात् स शीघ्रं विमोच्यतामान्तरपाशबन्धात् ॥४६॥



पू. योगिराजगुळवणीमहाराजैः संमाननपत्र-महावस्त्र-समर्पणेन सत्कृताः
ब्रह्मश्री पू. कवीश्वरदत्तात्रेयशास्त्रिमहाराजाः
( २५ मे १९६९ ) पुण्यपत्तने ।

पुण्यपत्तन-नगर-छाटण-कार्यालयाय २०–६–६९ दिने समर्पितम्
शारदा–(पुण्यपत्तनम् २.) १०–१५ : १६ ★ रजि. क्र. एम्. एच्. ५५७
० लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.

# शारदा-विशेषाङ्क-रत्नं

## म. गान्धी-विशेषाङ्कः

## दीपावली १८९१

## नोव्हेम्बर १९६९



म. गान्धी - जन्मशताब्दिमहोत्सवे 'शारदा' कारैः भारतराजधानीं गत्वा भारतराष्ट्राध्यक्षेभ्यः भव्यसमारोहे समर्पयिष्यते ३०० पृष्ठात्मकः चित्र-शतक-सुशोभितः शारदा -नूतन-( ११ )-वर्षारम्भ-विशेषाङ्कः। तस्य मूल्यं रूप्यकाः दश ( रू. १० )। परं वार्षिक-ग्राहकेभ्यः (रु. ८) विनामूल्यम् ।

त्वर्यताम् अग्रिमवर्षमूल्य-प्रेषणाय।
स्मर्यतां म. गान्धी - विषये
समये साहितीप्रेषणाय ।
आद्रियतां संस्कृत-प्रसारण-कार्यं
सर्वात्मना सहयोगेन ।

— संपादकः 'शारदा'

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.
[illegible]स्थलम्-१.- म.म. प्रा.द.वा.पोतदार, ४९८ शनिवार, पुण्यपत्तनम् २.
२.– श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.
खजिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.